इत्यादिभिर्विहितमित्यर्थः ॥ ४५—५४ ॥ **समवायनिरूपितेति** । वस्तुत इदं दुर्निरूपमेवान्यतरत्वमनुगतं कारणतावच्छेदकं कारणाव्यवहितोत्तरत्वस्य कार्यतावच्छेदकत्वमुपगम्य करणताद्वयं वा स्वीकरणीयम् ॥ ५५—६० ॥ **ईश्वराधीनतामिति** । स्वभावस्य प्राग्भवीयादृष्टसंस्काररूपस्याचेतनस्य चेतनाधिष्ठानमन्तरेणाकिंचित्करत्वाज्जीवस्यातीन्द्रियतत्साक्षात्काराकर्तुरधिष्ठानासंभवात्तदधिष्ठातृतयेश्वरस्येश्वराधीनतामुपगतामित्यर्थः । एतेन वैषम्यनैर्घृण्यादेरीशस्य नावकाशः । भक्तिरपि पूर्वं विशुद्धज्ञानात्मिकैवोक्ता । ज्ञानातिरिक्तस्य मोक्षसाधनतायाः श्रुत्यैव प्रतिषेधाद्विस्तरेणेह प्रागुक्तत्वाच्च । वासुदेवोऽपि ब्रह्मैव तत्प्रसादोऽपि विमलतत्साक्षात्कार एव । भक्तिस्तुत्यर्थमिह संपन्नोक्तभक्तैर्निषिद्धाचरणेऽपि प्रत्यवायाभाव उक्तः पूर्वापरग्रन्थपर्यालोचनातस्तथैव प्रतिभानात् । नराधमाना तु शिवविष्णुद्वेषमलिनान्त करणानामन्यथा प्रतिभानमुचितमेव ॥ ६१ ॥ **आनर्थक्यमिति** । अत्र परमेश्वरस्यास्वतन्त्रजीवप्रेरकत्वे विधिनिषेधशास्त्राभ्यामिष्टानिष्टसाधनत्वयोस्तत्तत्क्रियां प्रवृत्त्यर्थंबोधनस्य भवति निरर्थकत्वं पुरुषस्य स्वप्रवृत्तावस्वतन्त्रत्वात्परमेश्वरप्रवर्तनानिवर्तनाभ्यामेव तत्प्रवृत्तेः संपाद्यत्वात्तदभावे तादृशबोधसद्भावेऽपि प्रवृत्तिनिवृत्त्योरभावादिति तत्फलकशास्त्रस्यापि निरर्थकत्वमेवं सर्वस्य पुरुषकारस्येतिचेद्विवक्षितोऽर्थस्तदैतस्या एवाशङ्काया समाधातुमुचितत्वेन तदभावेनासङ्गतिर्दुर्वारा स्यादतः परतन्त्राणि पूर्वपूर्वतरभवकोटिसंपादितधर्माधर्मपरतन्त्राणि भूतानि तदधिष्ठातृतया प्रेरयति चेदीश्वरः संसारसमुद्रसंतरणे सर्वस्य विधिप्रतिषेधशास्त्रस्य श्रोतव्य इत्यादेः 'अहरहः संध्यामुपासीत' इत्यादेः 'मा हिंस्यात्' इत्यादेश्चानर्थक्यं तत्संपादनस्याशक्यत्वादेवं गुरूपसदनादेः पुरुषकारस्य च श्रवणादितो ब्रह्मज्ञानेऽपि सन्ध्योपास्तिहिंसापरिवर्जनादित पापानुत्पत्तावपि पूर्वाचरितधर्माधर्माणामेवानन्त्यात्तत्प्रेरकस्येश्वरस्य प्रेरणादितो निवृत्तेर्निमित्ताभावात्तद्भोगस्यैव विश्रान्तेर्भोगनान्तरीयकविधिनिषेधविषयक्रियातो धर्माधर्मधारायाश्चाविश्रान्तेरित्यर्थो वाच्यस्तथासत्युक्ताशङ्काया समाहितत्वेन नासङ्गतिः । तथाहि मनसा ध्यानादिभिस्तस्मिन्नद्वितीयपरमानन्दघने चिदात्मनि परमेश्वरे समाश्रिते वाचा कर्मणा चाचरितसकलफलसमर्पणेन निष्कामनित्यनैमित्तिकानुष्ठाननिषिद्धपरिवर्जनेनान्तःकरणे विशुद्धेऽहंकारादिसमस्तदोषे धर्माधर्माद्युत्पादके प्रक्षीणे भोगनान्तरीयककर्मभिर्धर्माद्युत्पादासंभवात्तत्त्वज्ञानेन संचितानां विनाशात्परमेश्वरस्य भोगप्रदकर्माभावेनाधिष्ठानतया प्रेरकत्वोपरमाद्भवति सुलभं संसारसमुद्रसंतरणम् । भवति चान्तःकरणशुद्धितत्त्वज्ञानोत्पादनरूपार्थवत्तया शास्त्रादेरर्थवत्त्वमिति । या तु पूर्वोक्तार्थकरणे प्रदर्शितशङ्का सापि समाहितेह प्रागधुनापि किंचिदुच्यते । सर्वेषामदृष्टेश्वरतदिच्छाप्रयत्नकालादीना साधारणकारणानामप्रत्यक्षाणा प्रत्यक्षगृहीतान्वयव्यतिरेककारणकलापोपसंहारमुखेनैव कार्यकारणत्वमङ्गीक्रियते न स्वातन्त्र्येण । दृष्टकारणेष्वेकस्याप्यभावे कार्यादर्शनाद्दृष्टसकलकारणसंपत्तौ कार्यविलम्बाभावाच्च तादृशसामग्रीसंपत्त्यसंपत्तिभ्यामदृष्टादिसद्भावासद्भावौ केवलमनुमेयौ । एवंच प्रवृत्तिनिवृत्त्योर्दृष्टे कारण इष्टानिष्टसाधनत्वज्ञानेऽन्वयव्यतिरेकाभ्यां क्लृप्तेनादृष्टादिमात्रमेवं तादृशज्ञानयोरपि प्रत्यक्षादिप्रमाणं नादृष्टमात्रमिति लौकिकप्रवृत्त्यादिविषयक्रियास्वदृष्टादिसहकृतप्रत्यक्षादिप्रमाणत इष्टानिष्टसाधनत्वग्रहसंपत्तिसंभवेऽपि धर्माधर्मादलौकिकक्रियायामदृष्टादिसहकृतशास्त्रत एव तत्संभव इति न शास्त्रवैयर्थ्यमेवमेव पुरुषकारस्यापि न वैयर्थ्यं नचादृष्टादिवैयर्थ्यम् । तत्साधनस्य कुसुमाञ्जल्यादिग्रन्थे विस्तरेण कृतत्वादिति ॥ ६२ ॥ ६३ ॥ **गुह्यादिति** । स्वर्गपशुहिरण्यपुत्रकलत्रादिषु परमार्थतो रागानर्हेषु नितान्तरक्तेभ्यो जडतमेभ्यो रक्षणीयादित्यर्थस्तेषां हि महति कर्मयोगे फलकामनाराहित्येन फलाजनके चेतोविशुद्धिद्वारा मोक्षानुबन्धित्वेनादरणीये फलाभावेन धनव्ययेन श्रमातिरेकेण चानदरातिशयस्यैव संभवादिति भावः । **गुह्यतरमिति** । प्रमाणमार्गनिष्णातमन्येभ्यस्तार्किकमीमांसकेभ्योऽशुद्धान्तःकरणेभ्यस्तात्पर्याग्रहेण कुमार्गपातिभ्यश्च रक्षणीयतरम् । तार्किकादीना हि प्रत्यक्षादिबलवत्प्रमाणबाधिताद्वैतादिविषयत्वेनाश्रद्धातिशयेनानादरातिशयान्मलिनान्तःकरणानां श्रद्धावतां च स्वर्गनरकादावापाततो मिथ्याग्रहाद्रागद्वेषप्राबल्याद्विहितत्यागनिषिद्धाचरणविनिपातकत्वाच्चेति भावः । **गुह्यतममिति** । मलिनतरान्तःकरणेभ्यस्तामसराजसश्रद्धायुक्तेभ्यस्तत्त्वतो ह्यगृहीतबहुतरार्थवादार्थेभ्यः शापगृहीतजन्मभ्यो बहुभ्यो नराधमेभ्यो रक्षणीयतमादित्यर्थः । तेषा हि बहुतरार्थवादव्यामोहितान्तःकरणतया नित्यनैमित्तिकवर्णाश्रमाचारधर्मपरित्यागेन यथार्थमत्स्वरूपाज्ञानेन बाह्यमुखतया चानर्थविनिपातप्रयोजकत्वादिति भावः । दुर्ग्राह्यतममदीयाद्वितीयानन्दचिद्घनशिवस्वरूपानुसरणस्य सर्वथा हि प्रथम दुःशक्यतादुर्ग्राह्यतरमदीयमायोपहितेश्वरात्मकरूपस्यापि तथात्वमित्यशुद्धान्तःकरणावस्थाया सुग्रहकोटिकन्दर्पकमनीयलीलामयमनुष्यानुकारिचतुर्भुजद्विभुजभवाच्युताद्यात्मकमूर्तेः सद्गुरूपदेशतो बाह्याभ्यन्तराराधनपरिपाटी विज्ञाय नित्यनैमित्तिकानुष्ठानपुरस्सरं प्रत्यक्षादिप्रमाणाबाधादितो दृढश्रद्धं स्वर्गाद्यतिशायिभविष्णवादिलोकसुखलोभेन निरन्तरं बाह्याराधनं भवति प्रथमं विधेयं तद्विहितवतश्च प्रक्षीणाशुद्धितयान्तराराधने भक्त्यभिरुचिस्ततश्च निरन्तरानुष्ठितात्प्रक्षीणतराशुद्धितया समुपजातशमदमादिमतो निरुक्तलोकाप्तिलोभविगमेन निष्कामसकलकर्मानुष्ठानाभिरतीश्वरस्वरूपानुपातिप्रज्ञत्वसंपत्त्या प्रक्षीणतमान्तःकरणाशुद्धिता भवति । भवति च मदीये शिवाख्ये परस्वरूपे मनसः प्रवेशयोग्यता । ततश्च विविदिषादिक्रमेण मदीयपरमानन्दैकतानाद्वयचिद्रूपाकारनिरन्तरवृत्तिप्रवाहरूपनिदिध्यासनात्मिका साक्षात्कारनिदानभूता भवति परा भक्तिरिति मूलोपायभूतत्वेन प्रशस्ततमा मत्परिच्छिन्नस्वरूपयजननमनादिरूपा भक्तिर्गुरुणा सम्यगुपदिष्टा प्रथमं सर्वैरनुष्ठेया । मदभिमता सा तु ज्ञानरहस्योपदेशप्रवणमनसा मया तदधिकारिणे

तुभ्यं नोपदिष्टाऽधुना शास्त्रोपदेशसमाप्त्या ततो व्यावृत्तमनसोपदिश्यत इति भगवदभिप्रायो नतु परमपुरुषार्थमोक्षानन्यसाधनज्ञानमार्गादुत्कृष्टत्वेन ततो गुह्यतमत्वे बाह्याभ्यन्तरपरिच्छिन्नस्वरूपयजननमनादिभक्तिमार्गे सकलान्यवस्तुमिथ्यात्वस्वस्वरूपाद्वयत्वपरमपुरुषार्थस्वप्रकाशपरानन्दरूपत्वपरपूर्वोपदिष्टमकलशास्त्रव्याकोपप्रसङ्गादिति ॥ ६४ ॥ **परित्यज्येति ।** अन्तःकरणशुद्ध्यधीनविविदिषासन्न्यासात्पूर्वं मुमुक्षुणापि फलकामनापरित्यागेन वर्णाश्रमोचितकर्मकरणस्य भूयसा प्रबन्धेन साधितत्वात्तदानी तत्परित्यागोपदेशे पूर्वापरविरोधप्रसङ्गाद्व्याचष्टे—**विद्यमानेति ।** शरणत्वेन ससारसमुद्रे मुहुर्निपततो रक्षकत्वेनानादृत्य फलकामनारहितनित्यनैमित्तिकानुष्ठानमात्रादेवाहं मुख्य इति बुद्धिस्तत्रादरस्तत्परित्यज्येत्यर्थं । तादृशानुष्ठानस्य केवलान्त.करणशुद्धिहेतुत्वेन ज्ञानोपायतैव । मोक्षोपायता तु श्रवणादिसाक्षात्कारान्तस्य मदेकशरणीकरणापरपर्यायस्यैवेति तत्रैवादरो नितरा विधेयो नतु कर्मणि शुद्धेऽन्त करणे विक्षेपहेतुस्तत्सन्यसनीयमेवेति भाव. । **मदेकशरणस्येति ।** नित्यनैमित्तिकानुष्ठानेन विशुद्धान्त.करणस्य सन्यासरूपसर्वधर्मपरित्यागेन निवृत्तविक्षेपस्य सजाताद्वितीयशुद्धचिद्रूपमदेकगोचरनिरन्तरवृत्तिप्रवाहस्येत्यर्थ ॥ ६५—७८ ॥

श्रीधर्मदत्तविदुषा मैथिलेन यथामति ॥ गूढार्थदीपिकालोको विहितोऽस्तु मुदे सताम् ॥ १ ॥

**इति श्रीमन्मिथिलावास्तव्यश्रीधर्मदत्तशर्म( प्रसिद्धश्रीबच्चाशर्म )प्रणीते भगवद्गीतागूढार्थदीपिकातत्त्वालोकेऽष्टादशोऽध्यायः ॥ १८ ॥**

**समाप्तोऽयं ग्रन्थः**

# श्रीमद्भगवद्गीतापद्यानामकारादिकोशः ।